# ॥ परमेश्वरस्तुतिसारस्तोत्रम् ॥

श्रीगणेशाय नमः ॥
त्वमेकः शुद्धोऽसि त्वयि निगमबाह्यामलमयं
प्रपञ्चं पश्यन्ति भ्रमपरवशाः पापनिरताः ।
बहिस्तेभ्यः कृत्वा स्वपदशरणं मानय विभो
गजेन्द्रे दृष्टं ते शरणद वदान्यं स्वपददम् ॥ १॥

न सृष्टेस्ते हानिर्यदि हि कृपयातोऽवसि च मां
त्वयानेके गुप्ता व्यसनमिति तेऽस्ति श्रुतिपथे ।
अतो मामुद्धर्तुं घटय मयि दृष्टिं सुविमलां
न रिक्तां मे याच्ञां स्वजनरत कर्तुं भव हरे ॥ २॥

कदाहं भोः स्वामिन्नियतमनसा त्वां हृदि भजन्नभद्रे
संसारे ह्यनवरतदुःखेऽति विरसः ।
लभेयं तां शान्तिं परममुनिभिर्या ह्यधिगता
दयां कृत्वा मे त्वं वितर परशान्तिं भवहर ॥ ३॥

विधाता चेद्विश्वं सृजति सृजतां मे शुभकृतिं
विधुश्चेत्पाता माऽवतु जनिमृतेर्दुःखजलधेः ।
हरः संहर्ता संहरतु मम शोकं सजनकं
यथाहं मुक्तः स्यां किमपि तु तथा ते विदधताम् ॥ ४॥

अहं ब्रह्मानन्दस्त्वमपि च तदाख्यः सुविदितः
स्ततोऽहं भिन्नो नो कथमपि भवत्तः श्रुतिदृशा ।
तथा चेदानीं त्वं त्वयि मम विभेदस्य जननीं
स्वमायां संवार्य प्रभव मम भेदं निरसितुम् ॥ ५॥

कदाहं हे स्वामिन् जनिमृतिमयं दुःखनिबिडं
भवं हित्वा सत्येऽनवरतसुखे स्वात्मवपुषि ।
रमे तस्मिन्नित्यं निखिलमुनयो ब्रह्मरसिका
रमन्ते यस्मिंस्ते कृतसकलकृत्या यतिवराः ॥ ६॥

पठन्त्येके शास्त्रं निगममपरे तत्परतया
यजन्त्यन्ये त्वां वै ददति च पदार्थांस्तव हितान् ।
अहं तु स्वामिंस्ते शरणमगमं संसृतिभयाद्यथा
ते प्रीतिः स्याद्धितकर तथा त्वं कुरु विभो ॥ ७॥

अहं ज्योतिर्नित्यो गगनमिव तृप्तः सुखमयः
श्रुतौ सिद्धोऽद्वैतः कथमपि न भिन्नोऽस्मि विधुतः ।
इति ज्ञाते तत्त्वे भवति च परः संसृतिलयात्
अतस्तत्त्वज्ञानं मयि सुघटयेस्त्वं हि कृपया ॥ ८॥

अनादौ संसारे जनिमृतिमये दुःखितमना
मुमुक्षुस्सन् कश्चिद्व्रजति हि गुरुं ज्ञानपरमम् ।
ततो ज्ञात्वा यं वै तुदति न पुनः क्लेशनिवहैः
भजेऽहं तं देवं भवति च परो यस्य भजनात् ॥ ९॥

विवेको वैराग्यो न च शमदमाद्याः षडपरे
मुमुक्षा मे नास्ति प्रभवति कथं ज्ञानममलम् ।
अतः संसाराब्धेस्तरणसरणिं मामुपदिशन्
स्वबुद्धिं श्रौतीं मे वितर भगवंस्त्वं हि कृपया ॥ १०॥

कदाहं भो स्वामिन्निगममतिवेद्यं शिवमयं
चिदानन्दं नित्यं श्रुतिहृतपरिच्छेदनिवहम् ।
त्वमर्थाभिन्नं त्वामभिरम इहात्मन्यविरतं
मनीषामेवं मे सफलय वदान्य स्वकृपया ॥ ११॥

यदर्थं सर्वं वै प्रियमसुधनादि प्रभवति
स्वयं नान्यार्थो हि प्रिय इति च वेदे प्रविदितम् ।
स आत्मा सर्वेषां जनिमृतिमतां वेदगदितः
ततोऽहं तं वेद्यं सततममलं यामि शरणं ॥ १२॥

मया त्यक्तं सर्वं कथमपि भवेत्स्वात्मनि मतिः
त्वदीया माया मां प्रति तु विपरीतं कृतवती ।
ततोऽहं किं कुर्यां न हि मम मतिः क्वापि चरति
दयां कृत्वा नाथ स्वपदशरणं देहि शिवदम् ॥ १३॥

नगा दैत्याः कीशा भवजलधिपारं हि गमितास्त्वया
चान्ये स्वामिन्किमिति समयेऽस्मिञ्छयितवान् ।
न हेलां त्वं कुर्यास्त्वयि निहितसर्वे मयि विभो
न हि त्वाऽहं हित्वा कमपि शरणं चान्यमगमम् ॥ १४॥

अनन्ताद्या विज्ञानगुणजलधेस्तेऽन्तमगमन्नतः
पारं यायात्तव गुणगणानां कथमयम् ।
गृणन्यावद्धित्वा जनिमृतिहरं याति परमां

गतिं योगिप्राप्यामिति मनसि बुद्ध्वाहमनवम् ॥ १५॥

इति श्रीमन्मौक्तिकरामोदासीनशिष्यब्रह्मानन्दविरचितं परमेश्वरस्तुतिसारस्तोत्रम् सम्पूर्णम् ॥